एतच्छ्रुत्वा, "आम्=स्वीकृतम्, प्रवेश्य=प्रवेशं कारय", इति=एवम्, सानन्दम्=आनन्दपूर्वकम्, सोत्साहम् उत्साहपूर्वकम्, च कथितवति=उक्तवति, महाराष्ट्रमण्डलाखण्डले=महाराष्ट्रमण्डलेन्द्रे, प्रतीहारः=सन्देशहरः, सपद्येव=त्वरितमेव, तम्=गौरसिंहम्, प्रावीविशत्=अन्तर्णीतवान्।

हिन्दी व्याख्या—अपजलखानदमनविषयकवार्ताम्=अफजलखाँ के दमन से सम्बन्धित वार्ता को। आरिप्सुषु=प्रारम्भ करने की इच्छा वाले, 'आ+√रभ्+सन्+उ (सप्तमी बहुवचन)। वेत्रहस्तः=हाथ में बेंत लिए हुए। प्रतीहारः=सन्देशवाहक। कक्षे=बगल में। संस्थाप्य=रखकर, 'सम्+√स्था, णिच्+पुक्+ल्यप्'। नमयित्वा=झुकाकर, '√नम्+णिच्+क्त्वा'। अञ्जलिं बद्ध्वा=अञ्जलि बाँधकर अर्थात् हाथ जोड़कर, "√बध्+क्त्वा'। न्यवीविदत्=निवेदन किया—"नि+√विद्+लुङ् (तिप्)'। दिदृक्षते=देखने चाहते हैं। 'दृश्+सन्+लट् (त, आत्मनेपद—'ज्ञाश्रुस्मृदृशां सनः)'। प्रवेशय=प्रवेश कराओ। सानन्दम्=आनन्दपूर्वक 'आनन्देन सहितम्' इति सानन्दम्, (अव्ययी०)। सोत्साहम्=उत्साहपूर्वक। कथितवति=कहने पर '√कथ्+क्तवतु (सप्तमी, एकवचन)'। महाराष्ट्रमण्डलाखण्डले=महाराष्ट्र मण्डल के इन्द्र के। आखण्डल=इन्द्र। निवृत्य=लौटकर। 'नि+√वृत्+ल्यप्। प्रावीविशत्=प्रवेश कराया, 'प्र+√विश्+लुङ्'।

टिप्पणी—महाराष्ट्रमण्डलाखण्डले='महाराष्ट्रमण्डल के इन्द्र' में श्रेष्ठ-पराक्रमी राजा शिवाजी में इन्द्र का आरोप किया है, अत रूपक अलङ्कार है।●

तमवलोक्यैव "इत इतो गौरसिंह! उपविश, उपविश। चिराय दृष्टोऽसि अपि कुशलं कलयसि? अपि कुशलिनस्तव सहवासिनः? अप्यङ्गीकृतमहाव्रतं निर्वहथ यूयम्? अपि कश्चिन्नूतनो वृत्तान्तः?" इति कुसुमानीव वर्षता पीयूष-प्रवाहेणेव सिञ्चता मृदुना वचनजातेन तत्रभवता शिववीरेणाऽद्रियमाणः, आपृच्छ्यमानश्च, त्रिः प्रणम्य, अन्तरङ्ग-मण्डली-जुष्ट-कटे समुपविश्य, करौ सम्पुटीकृत्य "भगवन्! अखिलं कुशलं प्रभूणामनुग्रहेणास्माकमखिलानाम्, अङ्गीकृत-महाव्रते च मा स्म पदं धात् कञ्चनान्तराय इत्येव सदा प्रार्थ्यते भगवान् भूत-

नाथः। नूतनः प्रत्नश्च को नामाद्यतनसमये वक्तव्यः श्रोतव्यश्च वृत्तान्तः-ऋते दुराचारात् स्वच्छन्दानामुच्छृङ्खलानामुच्छिन्नसच्छीलानां म्लेच्छ-हतकानाम्" इति कथयामास। ततश्च तेषामेवमभूदालापः।

हिन्दी अनुवाद—उसे (गौरसिंह को) देखते ही—"इधर-उधर गौरसिंह। बैठो, बैठो। बहुत समय बाद दिखे हो, कुशल तो है? तुम्हारी सहवासी सकुशल तो हैं? तुम लोग स्वीकृत महाव्रत का निर्वाह तो कर रहे हो? कोई नया समाचार है?" इस प्रकार फूलों की वर्षा सी करते हुये, अमृत प्रवाह से सींचते हुए से महाराज शिवाजी के मृदुवचन से समादृत होता हुआ गौरसिंह तीन बार प्रणाम करके, जिस पर मित्रमण्डली बैठी थी, उसी चटाई पर बैठकर, हाथ जोड़कर कहा—"भगवन्! प्रभु के अनुग्रह से हम सभी पूर्णरूप से कुशल हैं और हमारे स्वीकृत महाव्रत में किसी प्रकार का विघ्न न हो, यही भगवान् भूतनाथ (शङ्कर) से प्रार्थना किया करते हैं। आजकल नया अथवा पुराना वृत्तान्त क्या कथनीय अथवा श्रवणीय हो सकता है—केवल स्वच्छन्द उच्छृङ्खल, शील और सदाचार से रहित दुष्ट म्लेच्छों के दुराचार के अतिरिक्त।" उसके बाद में उनमें इस प्रकार वार्तालाप हुआ।

संस्कृत-व्याख्या—तम् = गौरसिंहम्, अवलोक्य = दृष्ट्वा, एव, इत इते, गौरसिंह = अत्रागच्छ गौरसिंह, उपविश-उपविश = तिष्ठ-तिष्ठ, चिराय = चिरकालात्, दृष्टोऽसि = अवलोकितोऽसि, अपि कुशलं कलयसि? = किमसि कुशली? अपि कुशलिनस्तव सहवासिनः = किं ते सहचराः कुशलिनः सन्ति, अपि = इति प्रश्ने, अङ्गीकृतमहाव्रतम् = स्वीकृतमहाव्रतम्, निर्वहथ = निर्वाहम् कुरुथ, यूयम् भवन्तः? अपि कश्चिन्नूतनोवृत्तान्तः = किमस्ति कश्चिदभिनव-प्रवृत्तिः? इति = एतत्, कुसुमानीव = पुष्पाणीव, वर्षता = वृष्टि कुर्वता, पीयूष-प्रवाहेणेव = अमृतप्रवाहेणेव, सिञ्चता = सरसी कुर्वता, मृदुना = कोमलेन, वचनजातेन = गिरोद्भवेन, तत्रभवता = माननी येन, शिववीरेण = राज्ञा, आद्रियमाणः = समादृतवन्तः, आपृच्छ्यमानश्च = पृष्टः सन्, त्रिः = वारत्रयम्, प्रणम्य = प्रणामं कृत्वा, अन्तरङ्गमण्डलीजुष्टकटे = स्वजनवृन्दमध्युषितकटे, समुपविश्य = स्थितोभूत्वा, करौ = हस्तौ, सम्पुटीकृत्य = एकीकृत्य, भगवन् = श्रीमान्, अखिलम् = सर्वम्, कुशलम् = अनामयम्, प्रभूणाम् = स्वामिनाम्, अनुग्रहेण =